रामः—किं मां पुनः पुनः प्रजल्पैरुत्पीडयसि क इव जानाति शिशिरोपचारमितरञ्च ।

विदूषकः—वैअस्स एसा दाणिं पच्चाअआ एक्का दे अंतःकरणपउट्टि जाणइत्ति कहेमि ।

रामः—( सहर्षं ) क्वासावेका ममान्तकप्रवृत्तिः जानकी । ( उत्थातुमिच्छति ) ।

विदूषकः—वैअस्स एव्वं खु मए उदीरिअं एसा दे पच्चागआ एक्का जाणइ सिसिरोवआरं अंतःकरणपउट्टित्ति ।

रामः—कथमन्यथा चिंतितं अन्यथा परिणतं । वयस्य !

याता मम तन्मयतामंतःकरणप्रवृत्तिरपि दूरे ।
प्रत्यागमिष्यति तु सा प्रत्यागच्छेत्प्रिया यदि सा ॥ २७ ॥

( ततः प्रविशति सोत्कंठं सीता विनीता च )

सीता—पिअसहि विणीदे कहिं एसा मे सीसवेअणा उवसमिस्सिदि ।

विनीता—जत्थ सो दिस्सइ ।

सीता—को ।

विनीता—जो दे इमाए हेदू ।

सीता—किं एँसो मे अंगसंतावो ।

विनीता—जो तस्सवि हेदू

सीता—को वा तस्य हेदू

विनीता—जो तुए बद्धंजलिए अब्भत्थिओ ।

---

१ वयस्यैषा इदानीं प्रत्यागतैका ते अंतःकरणप्रवृत्तिं जानातीति कथयामि । २ वयस्य एवं खलु मयोदीरितमेषा ते प्रत्यागता एका जानाति शिशिरोपचारमंतःकरणप्रवृत्तिरिति । ३ प्रियसखि विनीते कस्मिन्नेषा मे शीर्षवेदनोपशमिष्यति । ४ यत्र स दृश्यते । ५ कः । ६ यस्ते अस्याः हेतुः । ७ किमेष मेऽङ्गसंतापः । ८ यस्तस्यापि हेतुः । ९ को वा तस्य हेतुः । १० यस्त्वया बद्धांजल्याभ्यर्थितः ।

सीता—को[1] वा अप्पणो सन्तावहेउं अब्भत्थेइ ।

विनीता—सो[2] क्खु हेउत्ति क्खु पत्थिओ सन्तावहेदू जादो ।

सीता—जइ[3] सन्तावहेदू जादो कह कीरिसो अज्ज सीसवेअणं अवण-इस्सिदि ।

विनीता—अदिट्ठो[4] क्खु सन्तावहेदू दिट्ठो उण सो सोक्खाअ महिए विअ पाउससमओ ।

सीता—तहवि[5] तुए चेअ क्खु सो तदा अब्भत्थिओ ण उण मए ।

विनीता—बहिरंगापराद्धा[6] अ सा मे वाआमेत्तेण पत्थणा तुए उण अन्तरंगा अब्भत्था अ पत्थणा किदा ।

सीता—सहि[7] कामदेवोत्ति क्खु मए अंजलिबन्धो पत्थणा अ किदा ।

विनीता—होदु[8] कामं कामो एत्थ ववदेसो णिग्गच्छत्तिए उण दे वेव-माणाण ऊरुस्तम्भाण । किं भणासि ।

सीता—किं[9] सो अपुव्वजणदंसणसज्झसो ण हवे ।

विनीता—साहु[10] कप्पिओ एत्थ वाओ ।

सीता—किं[11] अदो वरं ।

विनीता—अणुरत्तविच्छिम्हण[12] से लोअण किं पडिवज्जइ ।

---

१ को वात्मनः सन्तापहेतुमभ्यर्थयते । २ सोऽस्महेतुरिति खलु प्रार्थितः सन्ता-पहेतुर्जातः । ३ यदि सन्तापहेतुर्जातः कथं कीदृशोऽद्य शीर्षवेदनामपनेष्यति । ४ अदृष्टः खलु सन्तापहेतुः दृष्टः पुनः सौख्याय मह्या इव प्रावृट्समयः । ५ तथापि त्वयैव खलु स तदाभ्यर्थितः न पुनर्मया । ६ बहिरङ्गापराद्धा च सा मे वाचामा-त्रेण प्रार्थना त्वया पुनरन्तरङ्गा आभ्यर्था च प्रार्थना कृता । ७ सखि कामदेव इति खलु मयाञ्जलिर्बद्धा प्रार्थना च कृता । ८ भवतु कामं कामोऽत्र व्यपदेशः निर्ग-च्छन्त्या पुनस्ते वेपमानयोरूरुस्तम्भयोः किं भणसि । ९ किं सोऽपूर्वजनदर्शनसाध्वसो न भवेत् । १० साधु कल्पितोऽत्र वादः । ११ किमतो वरम् । १२ अनुरक्तविच्छि-न्नयोर्लोचनयोः किं प्रतिपद्यते ।

सीता—दोलारोहणकिलंताए आकेअराइ णं मे लोअणाइ ।

विनीता—तहवि मए उण णिग्गमणाणुरुद्धाए अंजलिणा सह विमुक्कधीराए मंमुहपाडिआणं मंमहपीडिआणं णिग्गमिदुं अणिच्छंतीणं दिट्ठिणं भावो कहं णिगूहिज्जदि ।

सीता—सहि अणुत्तरम्हि संउत्ता ।

विनीता—उरा तुमं अणुत्तरा अत्थि खु अदो उत्तरं ते पिअसमाअमणं ।

सीता—एवं खु सहिअणो मं चिंतादि मंतेदि अ ।

विनीता—अणुभविस्सदि आ ।

सीता—( आत्मगतं ) कुदो मे सा सुजंमवदा ( प्रकाशं ) सहि तह होदु ।

विनीता—जइ मे दिट्ठिण भाअदेआ ।

सीता—हलौं चिट्ठउ एदं कहिं दाय गदुअ एदं संदावं अवणेमो ।

विनीता—पच्चग्गमहुलच्छिमहुरं माहविवणं गच्छम्म ता इदो भट्टिदारिआ ।

( उभे परिकामतः )

सीता—( सखेदं ) हैंला केतिअं वा गंतव्वं ।

विनीता—ईणं आरामं गच्छेम्मो ।

---

१ दोलारोहणक्लान्ताया आकेकरे ननु मे लोचने । २ तथापि मया पुनः निर्गमनाद्धयोजत्या सह विमुक्तधैर्यया सम्मुखपातितयोर्मन्मथपीडितयोर्निर्गन्तुमनिच्छन्त्योर्दृष्ट्योर्भावो कथं निगूह्यते ३ सखि अनुत्तरास्मि संवृत्ता । ४ पुरा त्वं अनुत्तरा असि सत्यतः उत्तरं ते प्रियसमागमनं । ५ एवं खलु सखीजनो मां चिंतयते मंत्रयते च । ६ अनुभविष्यति च । ७ कुतो मे सा सुजन्मवता । ८ सखि तथा भवतु । ९ यदि मे दृष्टपांभागधेयः । १० सखि तिष्ठतु एतत् कस्मिन्नपक्रम्यैतं संतापमपनेष्यामः । ११ प्रत्यग्रमधुलक्ष्मीमधुरं माधवीवनं गच्छामः तस्मादितो भर्तृदारिके । १२ सखि कियद्वा गंतव्यं । १३ एनमारामं गच्छामः ।

सीता—केहिं खु सो रामो ।

विनीता—भट्टिदारिए णं आरामो अम्हेहिं गच्छिअदिति खु मए भणिअं ।

सीता—( सविलक्ष्यस्मितं ) हैला केद्द खु दूरे सो आरामो ।

विनीता—( पुरो निर्दिश्य ) एअं खु तं माहविवणं जाव पविसह्म ।

सीता—तह ।

( उभे प्रविशतः )

हैला अविण्णादहिअअं तं जणं उक्कंठंती तुहवि अहं हिरअमि मुहं वेउं ।

विनीता—भट्टदारिए मा तह चिंतिअ तह णाम तुह अणुरत्तदिट्ठि-णिहाअणं खु सो सव्वहा उक्कंट्ठिओ भवे ।

सीता—हला अओज्झाउरि एसो जणो ण खु इदो तस्य सट्ठिदी अवाट्ठिदा ।

विनीता—तहवि तुमं दट्ठू सो अपुण्णमणोरहो एअं देसं ण मुंचइ ।

विदूषकः—वँअस्स केत्तिअं वा कालं पडिवालेमि जस्सिं दे एसो संदावो समं णीअदि ।

रामः—वयस्य एष मे निर्णयः ।

---

१ कस्मिन् खलु स रामः । २ भर्तृदारिके नन्वारामः आवाभ्यां गम्यतामिति खलु मया भणितं । ३ सखि कियति खलु दूरे स आरामः । ४ एतत्खलु तन्माधवीवनं यावत्प्रविशामः । ५ तथा । ६ सखि अविज्ञातहृदयं तं जनमुत्कंठमाना तथापि अहं जिहेमि मुखं दर्शयितुं । ७ भर्तृदारिके मा तथा चिंतयित्वा तदा नाम त्वदनुरक्तदृष्टिनिधापनं खलु स सर्वथा उत्कंठितो भवेत् । ८ सखि अयोध्यापुर्यां स जनः न खलु इतस्तस्य संस्थितिरवस्थिता । ९ तथापि त्वां दृष्ट्वा सोऽपूर्णमनोरथ एतद्देशं न मुंचति । १० वयस्य कियद्वा कालं प्रतिपालयामि यस्मिन् ते एष संतापः शमं नीयते ।

शीतांशुवदनां सीतां स्पृष्ट्वैव स्पर्शशीतलाम् ।
अपास्ततापमङ्गं मे शीतीभावमवाप्स्यति ॥ २८ ॥

विनीता—(कर्णं दत्त्वा) भट्टिदारिए इदो जणालाओ विअ सुणिअदि।[1]

सीता—सहि इमिणा माहविगुम्मेणंतरिदो दक्खम्म ।[2]

विनीता—( तथा कृत्वा दृष्ट्वा च ) भट्टदारिए दिट्ठिआ वड्ढसि एसो दे हिअअवल्लहो ।[3]

सीता—( दृष्ट्वा सहर्षं सानुरागं चात्मगतं ) हिअअ पडिअवट्ठावइ अप्पाणं किअत्थं खु दाणिं दे जम्मं ( साकारा संवरणं ) किं णु दाणिं एदं दक्खंतिए किंपि वेपइ मे हिअअं ऊरुजुगलं च फुरइ वामच्छि अहरो अ सिथिली होइ णीविगंधि धीरं च किलुम्मइ मणो सरीरं च ।[4] [5]

विनीता—जइ एव्वं भट्टदारिए इमस्स वि जणस्स विविक्तदेसे कोवि सेरालाओ वट्टइ तं सुणिस्सइ ।[6]

सीता—जहं पिअसहीए रोआदि ।[7]

विनीता—( विलोक्य ) भट्टदारिए पेक्ख परिदो सिसिरोवआरपरिअरं ।[8]

सीता—किं तेण मे ।[9]

विनीता—भट्टदारिए तुए उकट्ठाए संदाविओ खु सो ।[10]

सीता—कहं अज्झवरिससि ।[11]

---

१ भर्तृदारिके इतो जनालाप इव श्रूयते । २ सखि अमुना माधवीगुल्मेनांतरिते पश्यावः । ३ भर्तृदारिके दिष्ट्या वर्धसे एष ते हृदयवल्लभः । ४ हृदय पर्यवस्थापय आत्मानं कृतार्थं खल्विदानीं ते जन्म । ५ किं नु इदानीमेतं पश्यंत्याः किमपि वेपते मे हृदयमूरुयुगलं च स्फुरति वामाक्षि अधरश्च, शिथिली भवति नीविग्रंथिः धैर्यं च, भ्राम्यति मनः शरीरं च, । ६ यद्येवं भर्तृदारिके अस्यापि जनस्य विविक्ते देशे कोपि स्वैरालापो वर्तते तं श्रोष्यावः । ७ यथा प्रियसख्यै रोचते । ८ भर्तृदारिके पश्य परितः शिशिरोपचारपरिकरं । ९ किं तेन मे । १० भर्तृदारिके त्वदुत्कंठया संतापितः खलु सः । ११ कथमध्यवस्यसि ।

**विनीता**—जइ मं ण पत्तिआआसि दाणिं चेअ एअं सेरालावं सुणिस्ससि ।

**विदूषकः**—वअस्स एअ अब्भाहिदं तुमंपि णाम ओहत्थिअसव्वसेअवत्थुओ संतावावणोदत्थं एक्कं सीअं मण्णेसित्ति ।

**रामः**—( सनिर्वेदं तूष्णीमास्ते )

**विनीता**—असंपडिवत्तिए किं दाणिं तुस्सिसि ।

**सीता**—हला एक्कं सीअं वत्थु आत्थित्ति खु भणिअं ।

**विनीता**—हंत असंतुट्ठि ।

**विदूषकः**—वअस्स अवहित्तेण अ सीआं पजप्पंतेण तुए कुदो दाणिं वाहित्तेण सीआपसंगे ण दीअदि पच्चुत्ति ।

**रामः**—किं तया ।

**सीता**—( श्रुत्वा सखेदमात्मगतं ) किं तए इत्ति मे विहत्थेइ गआ मे मणोरहा ।

**विनीता**—( श्रुत्वात्मगतं ) कहं एस अण्णाहिअओ संउत्तो ।

**सीता**—हंजे किं दाणिं एत्थ ठीअदि दा गच्छम्ह ।

**विनीता**—भट्टदारिए मा तुमं तुवरेहि पुणोवि एअं आलावं छुन्दिम ।

**सीता**—उम्मत्तिए किं अदो वरंपि सुणिअदि ।

---

१ यदि मां प्रत्यापयसीदानीमेवैतं सैरालापं श्रोष्यसि । २ वयस्य [illegible] त्वमपि नामापहस्तितसर्वशीतवस्तुकः संतापापनोदायैकां [illegible] इति । ३ असंप्रतिपत्त्याः किमिदानीं तुष्यसि । सखि एकं [illegible] खलु भणितं । ४ हंतासंतुष्टिः । ५ वयस्य अभ्याहृतेन च सीतां [illegible] व्याहृतेन सीताप्रसंगे न दीयते प्रत्युक्तिः । ६ [illegible] गता मे मनोरथाः । ७ कथमेषो अन्यहृदयः संवृत्तः । ८ [illegible] तावदच्छावः । ९ भर्तृदारिके मा त्वं त्वरय [illegible] । १० [illegible] तिके किं अतः परोपि श्रूयते ।

विनीता—( आत्मगतं ) केहं अतिमेत्तं विसण्णा भट्टिदारिआ ।

सीता—( सनिर्वेदं ) हलों एहि गच्छम्ह अहव कहिं मए गच्छि-अदि ( इति मुह्यति )

विनीता—( ससंभ्रमं ) समस्सिसिहि भट्टिदारिए समस्ससिहि ।

रामः—( कर्णं दत्वा ) कथं स्त्रीजनसमाश्वासनशब्दः ( उत्थाय ससंभ्रममुपसर्पति )

विदूषकः—( श्रुत्वा ससंभ्रमं ) अविहा अविहा किं एदं ( उपश्रुत्य दृष्ट्वा च ) वेंअस्स एसा दे पाणवल्लहा ।

रामः—(दृष्ट्वा) कथं सीता (उपसृत्य)।प्रिये समाश्वसिहि समाश्वसिहि।

सीता—( शनैश्शनैः समाश्वसिति ) ।

रामः—( निर्वर्ण्य )—

*उन्मील्य नेत्रे मदनेन सार्धं-*
*मपांगधारीकृतकर्णपूरे ।*
**समाश्वसित्याननमायताक्ष्याः**
**समुच्छ्वसत्पंकजकोशकांतिः ॥ २९ ॥**

किं च ।

**नयनयुगसितमध्यं**
**सितपर्यंतं विभाति शबलाक्ष्याः ।**
**शितधारमंतरत्तक-**
**ज्यैत्रं मदनस्य चक्रमिव ॥ ३० ॥**

सीता—( समाश्वास्य रामं दृष्ट्वा सरोषं मुखं परावर्तयति । )

---

१ कथमतिमात्र विषण्णा भर्तृदारिका । २ सखि एहि गच्छावोऽथवा कस्मिन् मया गम्यते । ३ समाश्वसिहि भर्तृदारिके समाश्वसिहि । ४ अविद अविद किमेतत् । ५ वयस्य एषा ते प्राणवल्लभा ।

रामः—

इदं दरस्फुरदधरोष्ठपल्लव
श्रवौ समुल्लमयदनर्घ्यविभ्रमम् ।
मुख सपा कलुषविजिह्मलोचनं
कुतस्त्वया सुमुखि पराङ्मुखीकृतम् ॥ ३१ ॥

सीता—( गन्तुमिच्छति ) ।

विदूषकः—को दाणिं अदिक्कमो को एसो विओओ ।

राम —( हस्तेन गृहीत्वा ) प्रिये क एष संरम्भः ( सानुनय )

कृतापराधः किमु दौर्विदग्ध्या—
दय जनो दासजनादभिन्न ।
यन्नतुकामासि समाश्वसन्नचो
ममाद्य विम्बोष्ठि मनोरथेभ्यः ॥ ३२ ॥

विदूषक—(विनीता प्रति) होदि किणु खु तत्तहोदिए कोवकारण ।

विनीता—सीदाविसअ पच्चुत्ति कुदो ण देस्सिसित्ति तुए भणिदे कि दाए इत्ति भणिअ सुणिअ अप्पाण विहत्थिअ जाणन्ती किल एसा णिव्विण्णा ।

राम —( सस्मित ) कथ मयैवापराद्ध ( सीता प्रति ) अयि मुग्धे कि तया दुरापफलोपलिप्सया दुर्ललितया प्रत्युक्त्येति खलु मया कथित ।

विदूषक—( सहासं ) अम्हो अकालकोपणा अकारणकोपणा अ अत्तहोदी ।

सीता—( आत्मगत ) वेंह अण्णहा मए कहिअ ।

---

१ क इदानीमतिक्रम क एष वियोग । २ भवति किं नु खलु तत्रभवत्या कोपकारणं । ३ सीताविषयां प्रत्युक्तिं कुतो न दास्यसीति त्वया भणिते किं तयेति भणित श्रूयमाण विहस्तितं जानती किलैषा निर्विण्णा । ४ अहो अकालकोपना अकारणकोपना चात्रभवती । ५ कथमन्यथा मया कथित ।

विनीता—केहं अण्णहा गहीअं अम्हेहिं ।

रामः—किंच ।

वचो यद्यपि निर्गच्छेन्मुग्धे स्वेच्छतरं मुखात् ।
रामो बहिश्चरान् प्राणान् कथं हित्वा विहस्तयेत् ॥ ३३ ॥

अथवा सुमहद्वनेनोपकृतमकाण्डकोपकारिणा मौड्येन । कुतः ।

प्रणयादपि मानिन्या मानग्रह एव रोचते मह्यम् ।
ईर्ष्यायितमधुराणां येनाधिगमः कटाक्षाणाम् ॥ ३४ ॥

( नेपथ्ये )

अये प्राप्तः प्रदोषारंभः ।

यातो वासर एष शोषितजरत्कासारगर्तोदको
मार्तंडस्य करैरकुंठितशिखैः सार्कं करीषंकषैः ।
ये प्रातः प्रपलायिताः प्रतिदिशं प्रत्यागताः पक्षिण-
स्ते कांतासहिता विशंति निलयान् प्राप्तः प्रदोषोत्सवः ॥ ३५ ॥

रामः—( श्रुत्वा सखेदं ) इदं पुनर्मिथुनं प्रविघटते ।

विनीता—केहं उण वणपालआणं उग्घोसो भट्टिदारिए इदो गच्छम्ह ।

सीता—( आत्मगतं ) केवलं सरीरमेत्तेण ।

विनीता—इदो इदो भट्टदारिए ।

( परिक्रम्य निष्क्रांता सीता विनीता च )

रामः—( सौत्सुक्यं ) कथमसौ न मुद्र्यति कदाचिदभीप्सितफलाव-
लेहिनोपि संकल्पयोनिः संकल्पान् । तथाहि—

दृष्टैव सीता ननु दर्शनीया
स्पृष्टैव सा स्पर्शसुशीतलांगी ।

---

१ कथमन्यथा गृहीतमावाभ्यां । २ निरातुर्यान् । ३ कथं पुनः वनपालकाना-
मुद्घोषो भर्तृदारिके इतो गच्छावः । ४ केवलं शरीरमात्रेण । ५ इत इतो भर्तृदारिके ।

तथाप्यमीषां नु मनोरथानां
न शांतिरेषापि परं ममैव ॥ ३६ ॥

विदूषकः—वेअस्स अदिक्कामदि संझा । अज्ज हि दिअहसिरिविरह-खेदविप्पमुक्कप्पहो चंदपादाभिघादभीदो विअ अवरं वेअ आसं अवलंबेदि पउड्ढाणुराओ दिअहणाहो ता एहि गच्छम्ह ।

राम.—( विलोक्य ) कथमिदानीमस्ताचलशिखरिशेखरश्रियं विडंबयति लंबमानो भगवान् गभस्तिमाली । ( स्पर्शं रूपयित्वा )

उन्मीलन्नयमालिकांतरगलत्सौरभ्यसंवासिताः
श्रांताया दिवसश्रियो हिमकणैर्घर्मांम्बुकल्पैर्जडाः ।
पेयाघ्राणघटैः सुखेन नितरामालिंगनीया भुजै-
र्निश्वासा इव यांति मंदमधुना वाता वसंतश्रिय ॥ ३७ ॥

विदूषकः—इदो इदो पिअवअस्सो ।

( परिक्रम्य निष्क्रांतौ )

इति श्रीमद्गोविंद स्वामिन सूनुना हस्तिमल्लेन विरचिते
मैथिलीकल्याण नाम्नि नाटके द्वितीयोऽङ्कः ॥ २ ॥

---

१ वयस्य अतिक्रामति संध्या । अद्य हि दिवसश्रीविरहखेदविप्रमुक्तप्रभ चंद्र-पादाभिघातभीत इवापरामेवाशामवलम्बते प्रवृद्धानुरागो दिवसनाथः । तस्मादेहि गच्छाव । २ इत इत प्रियवयस्य ।

## तृतीयोऽङ्कः ॥ ३ ॥



( ततः प्रविशति वामनः )

**वामनः**—शोभणं खु लोईआ भणंति णत्थि स सुज्जे वासले पईवस्स अवसलेति जेण दाणिं सोहगवक्खजालंतलपविट्ठे पमिट्ठक्कंतसिलत्थलणिवटणपडिफलणदिउणपआसिअवासघलोदले पज्जलंतलअणकुट्टिमुट्ठिअंकञ्चणसलाआसहस्सपाडिहे दच्छिलस्सिपसले तिमिलोम्मूलणकुसले पसलंते वालाअवे अहगे मोहलअणप्पईवगहेण महालाअस्स पस्सादो पलिसमाविअज्झेवासमए दिअसमुहम्मि णिग्गए । ( परिक्रामन् श्रमं नाटयित्वा ) किलंतोम्ह उण्हच्छासेण कुस्स उण हि विस्सामिस्सं ( विचिंत्य ) होदु घलं चेअ गच्छेमि । केण खु ए मे गमणसहायलाहो भविस्सदि ।

( ततः प्रविशति कुब्जः )

**कुब्जः**—अंज्ज पच्चूसविअसंतपलद्दिग्घिआसलोलुहमउलोदलगलिअत्तहुलमभलंदलसोहिए पविट्ठोसाअजललवज्जलीकए अइमत्तसीअलिकिअमोत्ताहलजालए अणच्चात्थिअतालउंताणिले मंदाणिले वाअंदे णिवासंते

---

१ शोभनं खलु लौकिका भणंति नास्ति स सूर्ये वासरे प्रदीपस्यावसर इति येनेदानीं सौधगवाक्षजालांतरप्रविष्टे प्रमृष्टस्फटिकशिलातलनिपतनप्रतिफलनद्विगुणप्रकाशितवासगृहोदरे प्रज्वलद्रत्नकुट्टिमोत्थितकांचनशलाकासहस्रप्रतिमे दक्षिणरश्मिप्रसरे तिमिरोन्मूलनकुशले प्रसरति बालातपे अहमपि मोघरत्नप्रदीपग्रहेण महाराजस्य पाश्चात्यपरिसमापितसेवासमयदिवसमुखे निर्गतः । २ श्रान्तोऽस्मि उष्णोच्छ्वासेन कुत्र पुनर्हि विश्रमिष्ये । ३ भवतु गृहमेव गच्छामि केन खल्विदानीं मे गमनसहायलाभो भविष्यति । ४ अद्य प्रत्यूषविकसंतगृहदीर्घिकासरोरुहमुकुलोदरगलितषट्पदकदंबरसार्द्रिते प्रविरलावश्यायजललवजडीकृतेऽतिमात्रशीतलीकृतमुक्ताफलजालिके अनभ्यर्थितनालवृंतानिले मंदानिले वाति निवासातेऽहमपि स्वस्थविश्रामावसरः विनुत्पन्नसुखेमदन. निर्गतो महाराजस्य पार्श्वात् तस्मादिदानीमात्मनः गृहं गच्छामि ।

अहगोवि रुद्धविस्समावसले त्रिमुक्तताळउंतगहणे णिग्गए महालाअस्स पस्सदो ता दाणि अप्पणो घलं गच्छेमि ( परिक्रामति )।

वामनः—( दृष्ट्वा ) अम्हो ताळउंतगाही पिअसहो दासेलए जाव एअं सद्दावेमि । लेले दासेळअ ।

कुब्जः—( आकर्ण्य दृष्ट्वा च ) अम्हो रुअणदीवगाहि पिअसहे उल-लभए ( उपसर्पति )

वामनः—( निर्वर्ण्य ) अले पिअवअस्सा दासेळआ तुम्हे विलूब्वआ खु ओहसणिज्जा ।

कुब्जः—तहँ हि ।

हिंडंति कलभा विअ एत्थ ण सअणं लहेति उत्ताणं ।
ओऊहणं लहस्सिअ णिलंतलं वक्कहिअआओ ॥ १ ॥

( सहासं) अंठे उलंभआ कलमगमणं खु उत्तमाणं पुलिसाणं गमणंति पसस्सिअदि ।

वामनः—( सहासं ) सिंलेसिदे अहिलासो जं अण्णहा भणि-अंपि अण्णहा वक्खाणेसि मए खु कलह एत्ति सिंसल एव भणिएज्जं ण उण विक्के अदो येव्वं खु णं दासेलए त्ति तुवं अंतेउले सद्दाविअसि ।

कुब्जः—( सहासं सेर्ष्यं ) अंठे किं तुवं अप्पहिं अंधेसि तुह्मेहिं वामणेहिं ।

१ अहो तालवृंतग्राही प्रियसखा दासेरकः यावदेतं शब्दापयामि । रे रे दासेरक २ अहो रत्नदीपग्राही प्रियसखा वरभकः । ३ अरे प्रियवयस्या दासेरका यूयं वि-रूपका खलु उपहसनीयाः । ४. तथाहि । गच्छंति करभा इवात्र न शयनं लभ-तउत्तानं । उपगूहनं रतौ च निंतरं वक्रहृदयकाः । ५ अरे उरभ्रक कलभगमनं स्वच्छतमानां पुरुषाणां गमनमिति प्रशस्यते । ६ श्लेषितेऽभिलापः यस्मात् अन्यथा भणितमपि अन्यथा व्याख्यासि मयखलु कलभ इति शृंखल एव भणितं न पुन-र्विक्के, अत एव खलु ननु दासेरक इति त्वमंतः पुरे शब्दाप्यसि । ७ अरे किं त्वमात्मन्यंधोसि युष्माभिः खलु वामनैः ।

ओसण्णसलिलसंठिईहिं अत्थिअहो उत्थिअं पदंतेहिं ।
चडुलणिउञ्जंगेहिं गच्छियदि कच्छवेहि विअ ॥ २ ॥

वामनः—( सहासं ) हिंमाणए सुट्ठु कए उवालंभस्स पलिउवालंभे पिअसहा म हु मज्झे अक्खेइ जाव दाणिं अहगे तुझे पसंसेमि सुणाह दाव ।

पावंति लइम्मि दासिआओ
दिट्टपलिलट्ठसउआलपुण्णआओ ।
हिअअं चि सहावउण्णअंतं
सुमहंतं ण हु अत्थि अण्णआणं ॥ ३ ॥

कुब्जः—( सहासं ) साहु पसंसिअं पिअसह तेण हि अहंपि तुझे पसंसिस्सं होमि ।

देहहिअउट्ठपिट्ठिआ
णिहुवणखुंबिअणाहिकुविआ ।
अंसेसु कअग्गहत्थअे
उवरूहंति खु कोट्टिणीअणं ॥ ४ ॥

वामनः—( सहासं ) साहु पसंसिअं ।

उभौ—( सहासं ) अले सुसंगदं खु एअं णिउञ्जं ।

कुब्जः—( उवहसेदि पसंसेदि अ कुब्जं णिउञ्जोत्ति । )

वामनः—अले पस्स दाव अम्हालिसस्स टाअसडिवालस्स ।

---

१ आयतनघटस्थितिभिरर्धत उत्थितैः पतद्भिः चटुलनिकुञ्जाङ्गैः गम्यते कच्छपैरिव। २ अहो सुष्ठु कृतमुपालंभस्य प्रत्युपालंभः प्रियसखे मा खलु मद्वचनमुपेक्ष्य याव-दिदानीं मह युष्मान् प्रशंसे । शृणु तावत् । प्राप्नुवंति खलो दास्य॰ दृष्टारिंसमुदार-पुण्यकाः । हृदयमपि सखानामपि गुणमहत्त्वं न खल्वस्त्यन्येषाम् । ३ साधु प्रशंसितं प्रियसखे तेन हि अहमपि युष्मान् प्रशंसितं भणामि । देहयष्टिके पंकृष्टा त्रिभुवन-कुण्डितनाभिनृपिकाः । अंसेषु कचग्रहार्पणमुद्वहंति खलु कुट्टिनीजनं । ४ साधु प्रशंसितं । ५ अरे सुसंगतं खलु एवं निकुञ्जं । ६ उपहसति प्रशंसति च कुब्जं निकुञ्ज इति । ७ अरे पश्य ढक्कदस्यास्य यवनरिवरस्य ।

कुब्जः—अले विलूवपलिअणा खु वा ईसि सिलाहोंति चेअ पमहणपलिआलणे इस्सले चेअ ण्णं एत्थ णिद्दसणं जह्माअपलिवाले कुज्जो वामणो एला मूआ बब्बला कीलाआ संठेति ।

वामनः—अले मा खु अपला हि संति अ संढंपि ओहासेण कलुसेहि । स खु—

हत्थेहिं पुलिसे विअ खेलदि पुलिसेहिं इत्थिआ एव्व ।
पुलिसेहि पुलिसेविअ हत्थेहिं इत्थिअं चेय ॥ ५ ॥

कुब्जः—अले एव्वं एअं लक्खउदाहलणं । किलिवेमट्टिदालिआए मेहिलीए महत्तलीआ कलावई । सा खु—

पअडिचउला कव्वेसु कलासु उत्तला अ सअलासु ।
णेत्तविलोभणलूआ अणंगवोत्तम्हि अहिऊआ ॥ ६ ॥

वामनः—( विलोक्य ) अले एसे खु से वलिसधले कलावई इद अभिवट्टइ इमिणा पुणा सल्लावचटलेण संढेण सज्ज विसत्ताणं अहमाणं महंते काले गच्छेइ । ता एहि अह्मो इदो सिग्घं घलं चेअ गच्छेमो ।

कुब्जः—एवं कलेह्म ।

( उभे परिक्राम्य निष्क्रान्तौ )

---

१ अरे विरूपपरिजनाः खलु वा ईषत् श्लाघंते एव प्रमदजनपरिचारके ईश्वर इव नन्वत्र निदर्शनं यस्मात् राजपरिवारे कुब्जा वामना एडा मूका बर्बरा किरातास्तिष्ठंति । २ अरे मा खलु अपरा हि संति च षंढमपि उपहासेन कलुषय खलु स्त्रीभि पुरुष इव खेलति पुरुषै. स्त्रिय इव पुरुषैः पुरुष इव स्त्रीभिःस्त्रियमिव । ३ अरे एवमेतल्लक्षोदाहरणं क्लीवभर्तृदारिकाया मैथिल्या महत्तरीका कलावती । सा खलु, प्रकृतिचतुरा काव्येषु कलासूत्तरा च सुकलासु नेत्रविलोभनरूपाऽनङ्गदोत्येरभिरूपा । ४ अरे एषा खलु सा वर्षधरा कलावती इतोऽभिवर्तते ऽनेन पुन सल्लापचतुरेण षंढेन सद्य· विश्रांतयोरावयोर्महान् कालो गच्छति । तस्मात् एहि आवामितः शीघ्रं गृहमेव गच्छाव· । ५ एवं कुर्मः ।

## प्रवेशकः ।

( ततः प्रविशति षंढः )

षंढः—( यथोचितं परिक्रामन् ) हंत भो विदेहेश्वरदुहितुः परां कोटिमधिरोहति मदनोन्मादः ।

प्रततमखिलाः पश्यत्याशाः न किंचन पश्यति
स्तिमितमसकृत्सा संधत्ते वृथाग्नि च वेपथुम् ।
न खलु भजते भद्रां निद्रां न च प्रतिबुध्यते
स्मरति न पुनः किंचित्तं च स्मरत्यधिकस्मरा ॥ ७ ॥

अपि च । व्याजृंभमाणकुमुदकुड्मलकुहरचंक्रमणसंक्रांतसौरभावालितमलयानिलानुलिप्तासु मंडलीकृतशरासनसंधीयमानशरशतोत्क्षेपव्यापृतमन्मथासु कौमुदीविशदासु च क्षणदासु ।

किं चंद्रातपवारणोत्सुकतया किं चंदनार्द्रच्छटा
चर्चापाकरणाय किं शशिशिलानिष्पंदसेकेर्ष्यया ।
किं रंभादलवीजनं व्युदसितुं किं मन्मथं चंदितुं
शातुं वा स्वयमेव हस्तमबलाधिकृच्छ्रमुपच्छति ॥ ८ ॥

एवं च मन्ये । "ज्वलतानेन कदाचिन्म्रियता कालिकेन हृदयमिदं । इति किल तत्प्रतिकर्तु सुश्लिष्टा स्तननटा स्तस्याः"। इत्थं च प्रतिक्षणमुपर्युपरि वर्धमानायामवधीरितप्रतिविधानायां मनसिजरुजायामद्य तु पुनः प्रमदवनमध्यवर्तिनि धारागृहे वर्तमाना सांद्रचंदनक्षोदचर्चितपल्लवास्तरनिस्सहविधृतशरीरा भर्तृदारिका सीता विहस्तयंतीव सखीजनोपपादितां शिशिरोपचारनियंत्रणां दीर्घमुष्णं च निश्वस्य निवेदयंतीव संतापं प्रकाशयंतीवांतर्गतं भावं किमप्युपालंभमानेव प्रार्थयमानेव च मां किंचिदिवोन्नमयंती भ्रूलताग्रभागं पक्ष्मप्रमथितबाष्पजललवलुलितां कातरकातरमाकेकरतारकां साकूतां मन्मुख एव दृष्टिं पातितवती । अहं च गृहीतहृदयतया तत्क्षणमेव कृतं

संदेहेन संपादयामि ते समीहितमित्यवचनमेव प्रेमगर्भेण वीक्षितेन समाश्वास्य सव्याजमुत्थाय वृत्याकारावलम्बनेन निरवगमम् । तद्यावदिदानीमवलंबितं रामचंद्रस्यैव पार्श्वं गच्छामि ( परिक्रम्य ) एवं च पुनरवोचदस्मत्कर्णांते भर्तृदारिका हृदयनिर्विशेषा गृहीतभावा विनीता 'पिअसहि कलावई माहविवणे खु णं भट्टिणा रामेण भट्टिदारिआ दिट्ठा ता सोवि पदेसो तुए अण्णेसिदव्वोत्ति मण्णे सोवि तहि चेअ वट्टादि । कुदो ।

जत्थ खु पढमं दिण्णो अच्छीण ऊसवो पिअजणेण ।
उक्कंठिअं जण पुण सोपि पयेसो विणोदेई ॥ ९ ॥

ता जाव माहविवणं गच्छेमि । ( परिक्रामति अग्रतो विलोक्य ससभ्रमं ) कहं एक्को विडो मं उपसप्पिअ विहसिअमुहो भणाइ । जहहि ।

विटः—अये केयं कन्यका कथं राजकन्यका । भद्रिके श्रूयतां । मुक्ताहारो नाभिं चुंबनमयमपि न कुचकलशयोर्ययोर्लभतेऽन्तर । नाल भारं सोढुं मध्यः सुतनु तनुरपि तव तयोः सकुंकुमपंकयोः तद्यावत्त्वा याचे लीलानिहितपदमनतिमुखरक्वणन्मणिनूपुरं मुक्तायास मंदं मंदं श्रुतिसुभगरणितरशनं प्रयाहि नितंबिनी ( इति सलज्जं असौ स्तनसंन्यस्तहस्ता अपश्यन्य विलोक्य च ) अये अयममतो वेशवाटः । इह हि ।

मौढांगनारुचिरकंठघनांगरागः
कस्तुरिकापरिमलस्पृहणीयगंधः ।
सौभाग्यगर्वरसमंथर एव गत्या
चेतः प्रलोभयति नस्तरुणो नभस्वान् ॥ १० ॥

---

१. प्रियसखी कलावती माधवीवने खलु ननु भर्तृणा रामेण भर्तृदारिका दृष्टा तस्मात्सोपि प्रदेशस्त्वयान्वेष्टव्य इति मन्ये सोपि तस्मिन्नेव वर्तते । कुत । यत्र खलु प्रथमं दत्त अक्ष्णो उत्सव प्रियजनेन उत्कंठितं जन पुन सोपि प्रदेशो विनोदयति । तस्मान्माधविवनं गच्छामि । २ कथमेको विटो मामुपसृत्य विकसित मुखो मण्यते ।

( पुरो विलोक्य ) का पुण एसा किंपि संकंती विअ थणंसुओगुंठिआ अ पावं अवहिरिअ इद्दो अभिवट्टइ ( निरूप्य ) कहं वेसवहूहि रम्मई हला किं तुवं कंति विअ आअच्छसि । किं मणासि हला एत्थ वेसवाडमुह-मंडववट्टिणिं धुत्तगोट्ठिं परिहरिअ अत्ताणं णिग्गहमाणा आअच्छेमित्ति । तेण हि जुज्जइ धुत्ता हु णाम ।

महिलंअपुव्वआमयि विस्सद्धं विअ कुणंति चाडूहिं ।
तह तह वि णिवारिता कहवि ण मुंचेदि पत्थेंता ॥ ११ ॥

( सलज्जं ) हंजे एव्वं च अहं वि ठज्जेमि तेण पहेण गंतुं ता गच्छ तुमं ( विचिंत्य ) जाव अहंपि इमाए कुसुमायण्णवीहिआए गदुअ माहवियणं पवसेमि ( परिक्रम्य ) एसा कुसुमवणवीहि ( निर्वर्ण्य ) एत्थ हु णिच्चं अआलकुसुमसमूहआहिअउदुगुणा सव्वजणूसुअत्तणकरी वसइ महुसरि । ( पुनर्निर्वर्ण्य )

तामिह दक्षिणपवनो मृदु परिरमते विकाशमति ।
स्पृशति च जिघ्रति चुंबति पुलकयति त्वयमयमधुना ॥ १२ ॥

( अग्रतो विलोक्य ) कथमसौ स्वोद्वसितालिंदोपांतोपविष्टा मख-मुखविपाटितानि सौगंधिककुसुमानि ग्रन्थाति स्मितेनैव समानयति मां वासंतिका । ( उपेत्य ) वासु वासंतिके ।

---

१ का पुनरेषा किमपि संक्रमन्तेव स्तनांशुकावगुंठिता । च पापमवधार्येतोभि-वर्तते । २ कथं वेश्यवधूभिः रम्यते सखि किं त्वं क्रांतेवागच्छसि । किं भणसि । सखि अत्र वेश्यावाटमुखमंडपवर्तिनी धूर्तगोष्ठिं परिहृत्यात्मानं निगूहमाना आग-च्छामि । तेन हि युज्यते धूर्ता खलु नाम । महिलामपूर्वामपि विश्रब्धामिव कुर्वंति चाटुभिः तथा तथापि निवारिता कथमपि न मुंचति प्रार्थयमाना । ३ सखि एवं अहमपि लज्जामि तेन पथेन गंतुं । तस्माद्गच्छ त्वं ४ यावदहमपि अनया कुसुमा-यणवीथ्या गत्वा माधवीवनं प्रविशामि । ५ एषा खलु कुसुमवनवीथिः । ६ अत्र खलु नित्यमकालकुसुमसमूहमाहितऋतुगुणा सर्वजनोत्सुककरी मधुश्रीः ।

क्रीणाति पुष्पाणि गुवा त्वया य-
स्त्वत्स्लापसौख्येन विलोभ्यमान ।
पश्यामि तस्माद्य वर स एव
क्रीणात्यय त्वां कुसुमोपभागिनम् ॥ १३ ॥

किं ब्रवीषि प्रियसखि सभाव्यतामसौ चिकुरभरसमर्पणेन सौगन्धिकमालेति सकोप कथमसौ भद्रदा स्त्रियमिव मा कदर्थयति तत्किमनया । इतो वय (परीक्ष्य विलोक्य च) एतन्माधवीवनद्वार यावत्प्रविशामि (प्रविश्य) अनेन खलु मया भर्तृदारिका द्रौस्यावलयिना कालातिपातप्रमादिना न भवितव्यं । कुत ।

सैषा सप्रति नैव तावदबलाकालातिपातक्षमा
शांतं पापममगल प्रतिहत तापः कथ कथ्यते ।
का वार्ता स्तनभारमध्यपतिते मुग्धे मृणालांकुरे
हारास्तत्क्षणमेव वक्षसि यदा नीलोत्पलश्यामलाः ॥ १४ ॥

अपि च तस्याः खलु ।

किसलयतल्पसमर्पित देहाया मदनदहनतप्तायाः ।
हारा स्वदेहनिहिता जनयति स्फोटकाराकाम् ॥ १५ ॥

एतच्च न सप्रति दूये त्वरयति । अत्र हि ।

अस्माभिः शिशिरोपचारविधिना कृच्छ्रात्समाश्वासिता
सकल्पाहितकांतसनिधिसुखा मोहावसाने पुन. ।
सा बाला विवशा प्रवालशयनादुत्थाय सभ्रभ्रय
स्मेरा किंचिदधोमुखी सशनकैराकाशमालिंगति ॥ १६ ॥

(अन्यतो विलोक्य) कथमसौ माधवीवनपालिका मधुवती। भद्रे मधुवति विमुक्तमाधवीवनविहारसुखा किमिति द्वारोपांत एव वर्तसे । किं ब्रवीषि ।

अंज्ज[1] अब्भंतरे वअस्ससहिदो दासरही वट्टइत्ति युज्यते ( आत्मगतं ) सफलं नो दौत्यं ( व्रीडां नाटयति ) गंधवती तेणं[2] हि अहंपि लज्जेमि तस्स पासे विहरिदुं अण्णदो विहरिस्सं त्ति । कथं अपक्रम्य निष्क्रांता गंधवती । पंढः ( निर्वर्ण्य ) अहो रामणीयकं माधवीवनस्य । इह हि ।

अयं खलु विलासिनीमुखसरोजगण्डूपितै–
र्विभाति मधुसीकरैरसमयेपि संभावितः ।
मदांधमधुपांगनाजननिपीतकादंबरी–
रसप्रसरधूसरः प्रसवकेसरः केसरः ॥ १७ ॥

केहं[3] सिंजअरवाअड्ढा घटेंति मे तुलाकोडिकोडिसु उज्जाणदिग्घिआसु कलहंसिआ ता जह एदेण सिंजंति मंजीरिआ तह एअं उद्देसं णिस्संद्द–अण्णा संगच्छेमि ( तथा परिक्रम्य ) यावदहं रामचंद्रमासाद्य दूत्यं संपादयामि ( विचिंत्य सखेदं ) अहवा[4] कित्तिएत्ति अहं पिअसहिए सोअ–णिज्जं दसं णिवेदेमि भट्टिणो । सा खु ।

परितवइ थणाणं मोहविण्णत्तणाणं
अकअतवगुणाणं तस्स आलिंगणाणं ।
अद्द अ णिअरूआए अप्पडीआरदाए
ण हु मुणइ सहीओ अप्पणोसा सहीओ ॥ १८ ॥

( उपवनं निर्वर्ण्य ) अयमालं एभिः शोभनीयाक्षरैः ।

---

१ आर्य अभ्यंतरे वयस्य सहितो दशरथिः वर्तते इति । २ तेन हि अहमपि लज्जे तस्य पार्श्वे विहर्तुं तस्मादन्यतो विहरिष्यामि । ३ कथं शिंजितरवाकृष्टा घटेते मे तुलाकोटिकोटिषु उद्यानदीर्घिकासु कलहंसिका । तस्माद्येते न शिंजंति मंजरिकास्तथा एनमुद्देशं निष्पंदे अन्यान् संगच्छामि । ४ अथवा कियतीत्यहं प्रियसख्याः शोचनीयां दशां निवेदयामि भर्तुः । सा खलु । परितपति स्तनयो- र्मोघविज्ञ.तयोरकृतत्पगुणयोस्तस्यालिंगनयोः । अथ च निजरूपया अप्रतीकारतया नहि जानंति सख्यः आत्मनःसखीः ।

अभ्यग्रपुष्पत्सहकारमेतत्
मंदानिलस्वैरविहारहृद्यम् ।
उद्यानमुद्दाममनोमयं नः
करोति साहाय्यकमद्य कृत्ये ॥ १९ ॥

( पुरोवलोक्य ) मन्ये स एव दाशरथिः परममित्रं गार्ग्यायणः यावदुपसर्पामि ।

( उपसर्पति )

( ततः प्रविशति विदूषकः )

विदूषकः— ( दृष्ट्वा ) कहं एका एसा महणिज्जा इत्थिआ ( उपसृत्य ) होदि कुदो मं उवसप्पासि ।

पंढः—अज्ज किं वि पुच्छिदुं ।

विदूषकः—तेण हि पुच्छेसि ते समीहिअं

पंढः—कहिं दे पिअवअस्सो ।

विदूषकः—को[6] मे पिअवअस्सो ।

पंढः—दासरहि ।

विदूषकः—किं तं जाणासि ।

पंढः—कहं सुज्जं हत्थेण ओआरोसि ।

विदूषकः—किं[10] तेण कज्जं ।

पंढः—किंपि[11] तस्स पणयिणि संदेसं आचक्खिदुं ।

विदूषकः—कां वा तस्स पणयिणि ।

पंढः—सीआं ।

१ कथमेषैपा महनीया स्त्री । २ भवति कुतो मामुपसर्पसि । ३ आर्य किमपि प्रष्टुं । ४ तेन हि पृच्छ ते समीहितं । ५ कस्मिन् ते प्रियवयस्यः । ६ कोऽयं प्रियसखः । ७ दाशरथिः । ८ किं तं न जानासि । ९ कथं सूर्यं हस्तेनापवारयसि । १० किं तेन कार्यं । ११ किमपि तस्य प्रणयिन्याः संदेशमाख्यातुं । १२ का वा तस्य प्रणयिनी । १३ सीता ।

विदूषकः—( सहर्षं ) किं[1] तुमं तस्सा सहि ।

पंढः—ओम[2] ।

विदूषकः—( सहर्षं ) तेण[3] हि विरमेमि इमादो परिब्भमादो ।

पंढः—किंति[4] खु पुव्वं परिब्भमेसि ।

विदूषकः—तत्तहोदी[5] सिसिरोवआरोवआरणाणि आणेदुं परिब्भमामि तुमं पुण दाणिं तस्स अणिरिसं सिसिरोवआरोवअरणं लद्धा ता एहि दाणिं सिग्घं वअस्सस्स पासं येव्व गमिस्सम्ह ।

पंढः—तथा ।

( परिक्रामतः )

( ततः प्रविशति रामः )

रामः–( सोत्कंठं ) सा खलु ।

श्लाघ्या विभ्रमलक्ष्म्या शृंगाररसाधिदेवता साक्षात् ।
संचारिणी पदाभ्यां मूर्तिमती कैशिकी वृत्तिः ॥ २० ॥

अहो दुर्वारा मानसी प्रवृत्तिः । अथ हि ।

स्पृशति मयि सा मृणालीकल्पलीककलंकिते
किमपि वदति यन्मोहान्तो भयोच्छ्रितयेपथुः ।
कमलकलिकाघ्रातस्मेरा व्यलोकत सस्पृहं
स्फुरति हृदि तत्किंचिद् व्रीडांचितं किलकिंचित् ॥ २१ ॥

किंच सुमहदिह वयं विस्मेराः यदुत विषयानुषंगकलुषितं जनं परिनिंदंतो वयमेव पामुकजनधैर्यामिषघस्मरेण स्मरेण सटीकृता स्मः । अथवा ।

---

१ किं त्वं तस्याः सखी । २ ओम् । ३ तेन हि विरमामि अस्मात् परिभ्रमात् । ४ किमिति खलु पूर्वं परिभ्रमसि । ५ तत्रभवती शिशिरोपचारोपकरणान्यानेतुं परिभ्रमामि त्वं पुनरिदानीं तस्यानीदृशं शिशिरोपचारोपकरणं लब्ध्वा तस्मादेहि इदानीं शीघ्रं वयस्यस्य पार्श्वमेव गमिष्यावः ।

स्वच्छांतरात्मापि गुणेन मन्ये
न स्याद्वशे दर्पक शासनस्य ।
तस्याः स्तनौ यच्चवकुंकुमार्द्रौ
चाश्लिष्य हारोऽप्यनुरक्त आसीत् ॥ २२ ॥

( विचिंत्य ) कथं नु भो तद्गुणचिंताद्युस्थितं चेतः पर्यवस्थापयामि ( विभाव्य )

यत्र यत्र मया दृष्टा दृष्टिरम्या मृगेक्षणा ।
विनोदयेयमात्मानं तं तमुद्देशमुद्दिशन् ॥ २३ ॥

( अवलोक्य सकौतुकं ) ।

अत्राकारणरूढकोपजनितां मूर्छां विषादोत्तरां
तत्कालोपनतेन निःसहतनुः कृष्णान्मया मोचिता ।
अग्रे मामथ वीक्ष्य सेर्ष्यमकरोद्भ्रायस्तुर्दं मनः
सव्याजं नयनांतमत्र विधुरं यांती मयि प्राहिणोत् ॥ २४ ॥

( सखेदं ) कथमेतदपि नालं विरहखेदापनोदनाय ( सविस्मयं ) ।

चित्रं नः स्फुरतीदं हृदयमनेनापि विरहदहनेन ।
कुसुमशरस्यापि शरा निर्भग्ना नैव दृश्यंते ॥ २५ ॥

( विचिंत्य ) क इवात्र समाधिः । वयस्य गार्ग्यायण ( पार्श्वतोऽवलोक्य ) कथं न संनिहितो वयस्यः अहो मे प्रमादः मयैव हि शिशिरोपचारसज्जीकरणाय प्रेषितो वयस्यः ( पुरो विलोक्य ) कथमेकया स्त्रिया सहितः प्रहृष्ट इव वयस्यः इहागच्छति । ( निरूप्य ) नहि नहि येन केन पुरुषेण ( विभाव्य ) कथमसौ तृतीया प्रकृतिः । कुतः खल्वयमनियुक्तकारी केनापि पंढेन सहागच्छति वैधवेयः ।

विदूषकः—( उपसृत्य ) जेयदु पिअवअस्सो ।

पंढः—जयतु स्वामी ।

---

१. जयतु प्रियवयस्यः ।

5502

विदूषकः—अम्हो पुव्वं इत्थिआ विअ मए संजप्पिअं वअस्सेण दाणिं पुरिसो विअ संभासदि ।

रामः—वयस्य क एष ते प्राघूर्णकः ।

विदूषकः—एसो खु तुह सिसिरोवआरो ।

रामः—न खलु यथावज्जानामि ।

विदूषकः—एसो खु तत्तहोदिए सीदाए तुए संजादुक्कंठाए पहिदा दूई ।

रामः—( सादरं ) आर्य स्वागतं इहोपविश्यतां ।

मंदः—यथाज्ञापयति स्वामी ।

रामः—वयस्य उपविश ।

विदूषकः—जं भवं भण्णादि ।

( सर्वे उपविशंति )

रामः—( मंदं प्रति ) सखे प्रियावृत्तांतनिवेदनेन विध्यापय विरहवन्हिं ।

मंदः—शृणोतु स्वामी ।

सख्यास्तावद्विरहविधुरं भावमाख्यातुकामः
प्रेमाक्रांतं हृदयमपि ते तादृशं तर्कयामि ।
विस्रंभोऽयं मुखरयति मामंग तस्मादिदानी–
मागंतव्यं त्वरिततरमित्येव विज्ञापयामि ॥ २६ ॥

विदूषकः—तेहिं कहेहि तत्तहोदीए अवत्थं ।

रामः—सखे कथ्यताम् ।

मंदः—

---

१ अहो पूर्वं स्त्रीव मया संजल्पितं वयस्येनेदानीं पुरुष इव संभाषयति । २ एष खलु तव शिशिरोपचारः । ३ एषा खलु तत्रभवत्या सीतया त्वयि संजोत्कुंठया प्रहिता दूती । ४ यद्भवान् भणति । ५ ... पृच्छ भवत्या अवस्थाम् ।

अंगाकर्णय सा हि मन्मथशरासारैकलक्षीकृता
नो मिथ्याकुरुते वचांसि विरहे बाला कवीनामपि ।
किं वा संप्रति कथ्यते बहुतरं यत्सत्यमत्रांतरे
सर्वस्यापि सखीजनस्य भवतो नामैव नामाभवत् ॥ २७ ॥

विदूषकः—[1]एकग्गचित्तदा खु वाआंपि तह पवट्टावेदि ।

चंद्रः—न केवलं नाममात्रेण तस्याश्चेतोविपर्यासः । एवं च सल्यसौ सखीं वदति । यथा ।

संकल्पैस्तु पुरःस्थितेन बहुशस्त्वं विमलब्धासि ते
कांतेनेति शुचा निवारयसि मां प्रत्युत्थितां संप्रति ।
याचे त्वामयमंजलिः प्रियसखि प्रत्यागते वल्लभे
साक्षादागतवानसाविति शनैः कर्णे तदा मे वद ॥ २८ ॥

रामः—अहो संकल्पानां दृढिमा ।

विदूषकः—[2]उभयं खु विरहिआणं पिअजणसमाअमसोक्खं जणेई संकप्पा णिद्दा [illegible] ।

चंद्रः—कुतः खलु तस्या निद्रागमः । एवं [illegible] पुनर्निद्रार्थिनी सखीं व्याहरति यथा ।

निद्रार्थे यतते यथा पुरमहं त्वं चालिपार्श्वे स्थिता
त्वं स्वप्नागतमार्यपुत्रमुचितं विज्ञाय विज्ञापय ।
स्वस्ति स्वागतमंग पश्य भवत कांतामिमामीदृशीं—
तद्यावद्भयनादतः परमितस्त्वं धीरमागा इति ॥ २९ ॥

रामः—अहो संभावनीयमेतन्मौग्ध्यं ।

---

१ एकाग्रचित्तता खलु वाचमपि तथा प्रवर्तयति । २ उभयं खलु विरहवर्तीनां प्रियजनसमागमसौख्यं जनयति संकल्पा निद्रा च ।

विदूपकः—कैहं अतिमेत्तं किलंता मणोमवेण तत्तहोदी ।

पंढः—अयि भो रामदेव ।

किसलयलीलातरला विसवलयविलासकोमलच्छाया ।
सा कुसुमबाणबाणा सारेण सदा समाविद्धा ॥ ३० ॥

विदूषकः—( सविस्मयं ) वअस्स एकाए वाआए संकिअं पाउदं मणइ एस वाआकुसलो अदो एव्व सु संलप्पिआदि इत्थिआ पुरिसो अ ।

रामः—( सस्मितं ) साधूक्तं ।

विदूपकः—अज्जं पकिदे चेअ अणुसरिअदु ।

पंढः—तथास्तु ।

विदूपकः किं वा वण्णिआदि दिट्ठा चेअ सु सा मए वअस्सदसा । जं एसरमणिज्जंपि कोइलकूजिदादि उव्वेअणिज्जं मुणेइ ।

पंढः—युज्यत एतत् । इत्थमेव हि सा मन्मथार्ता सखीं प्रार्थ्यते तथा ।

मृषाशोकामवेक्ष्य मे प्रियसखी जाता स्वयं सारिका
कर्तव्यं त्विदमेव संप्रति सखि प्राप्तं तवावश्यकम् ।
दत्वा विप्रलभस्व दाडिमफलं तं वाचवूकं शुकं
तूर्णं चोत्कुरु कोकिलानुपवनात्कोकूयमानानिमान् ॥ ३१ ॥

संभाव्यते एवैतत् ।

विदूपकः—ऐआरिसं दसं अणुहवतीं तत्तहोदिं किं सिसिरोवआरेण पढिअवट्ठेवइ सहिअणो ।

---

१ कभमतिमात्रं क्लांता मनोभवेन तत्रभवती । २ वयस्य एकया वाचा संस्कृतं प्राकृतं भणत्येष वाक्कुशलः अत एव खलु संलप्यते स्त्री पुरुषश्च । ३ आर्य प्रकृतिरेवानुश्रियता । ४ किं वा वर्ण्यते दृष्टैव खलु सा मया वयस्यदशा यदेष रमणीयमपि कोकिलकूजितादि उद्वेजनीयं जानाति । ५ एतादृशीं दशामनुभवतीं तत्रभवतीं किं शिशिरोपचारेण प्रत्यवस्थापयति सखीजनः ।

पंढः—एवं सा मुग्धा सज्जीकृतशिशिरोपचारामपि सखीमुपालभते। यथा।

> यस्येदांशुपिनिधहाय सुतरां सज्जीकृत मे त्वया
> खिद्यत्यय हि मां शुपादनिहितं तच्चंद्रकांतस्थलम्।
> तत्तेवमतिकारमस्य कुरु तैः कर्पूरचूर्णैर्मुहुः
> शीतैः शीतलिकानिलैरपि सखि मागेय तद्वीजय॥ ३२॥

रामः—अभिरूपोऽयमुपालंभः।

विदूषकः—वेअस्स एआरिसिं तत्तहोदि असमंसासेयंतो तुमं खु एय उपालंभं अरुहेसि।

पंढः—न खल्वसावुपालम्भव्य.। परतु प्रशंसितव्यः। ( रामं प्रति )

> त्वं कल्याणिन् जगति कृतिनामेक एवाग्रगण्य
> संतापानामपि च न भवान् भाजनं तद्विधानाम्।
> दिष्ट्या दृष्टं न खलु भवता यत्पुरः शोकमूकं
> सख्या चक्रं सततरुदितकेकरोच्छूनचित्रम्॥ ३३॥

रामः—( सस्मित ) सखि साधु त्वमुपालंभविमुखासि।

विदूषकः—एआरिसस्स संदावस्स कहं उवसमं करोदु सहिअणो।

पंढः—स्वयं पुनरसौ सखिकृतां शिशिरक्रियामसहमाना शिशिरसंविधानकमन्यदुपदिशति। यथा।

> मामेवं सखि किं पुनः पुनरपि व्यर्थैः कियाकौशलैः
> यस्येह शिशिरोपचारमपरं दृत्तायथाना भव।
> चंद्रं स्नापय चंद्रकांतसलिलैश्चंद्रातपं चंदन-
> क्षोदेन क्षिप वीजयार्द्रकदलीपत्रेण चैत्रानिलान्॥ ३४॥

---

१ वयस्य एतादृशीं तत्रभवतीमिममाश्वासयन् त्वं खलु अत्रोपालम्भमर्हसि।
२ एतादृशस्य संतापस्य कथमुपशमं करोतु सखीजन।

रामः—अहो अनीदृशं शिशिरकर्म ।

विदूषकः—हद्धि हद्धि किं अदो वरं पडिवज्जइ सहि ।

चंद्रः—इत्थं तु सासि पुनरपि लपति । यथा ।

वक्त्रं ते प्रतिबिंबितं मरकतस्निग्धेम्बरे नो शशी
कांताशुर्विसवैरपांगकिरणैर्मिश्रो न चंद्रातपः ।
निःश्वासाः प्रसरंति तापविषमा दीर्घं न मंदानिलाः
कष्टं किं प्रति संप्रति प्रियसखि त्वं विक्लुवा क्राम्यसि ॥ ३५ ॥

रामः—समुचितोयमपलापः । सखिजनायत्तं खलु विरहिणीनां जीवितम् ।

विदूषकः—कहं खु इत्थंभूदंपि अप्पाणं समंसासेदं वअस्सं तत्तहोदी समंसासइसिविति विस्ससेदुं ।

चंद्रः—एवमेतत् । ( रामं प्रति )

विरतस्त्वयि विश्वासः सख्याः शठ दुःसहोष्णनिःश्वासः ।
न कुतोपि समुच्छ्वासः कथय कथं तावदाश्वासः ॥ ३६ ॥

विदूषकः—को वा तिस्से आसासो जइ सिसिरोवआरंपि पडिद्देसइ ।

चंद्रः—न केवलं प्रतिद्वेष्टि इत्थं च सखीमानिच्छंतीं निर्भुंके । यथा ।

किं मामित्यमुपेक्ष्यसे सखि मुधा निर्व्याजमुत्थीयतां
सद्यो मुद्रय कैरवाणि मधुपान् कुत्रापि विद्रापय ।
पाताले शशिनं निधेहि जलधौ ज्योत्स्नां समावर्जय
स्कंधे बंधय गंधसिंधुरपदस्तंभेषु मंदानिलान् ॥ ३७ ॥

---

१ हा धिक् हाधिक् किमतः परं प्रतिपद्यते । २ कथं खलु इत्थंभूतमप्यात्मानं समाश्वासयंतं वयस्यं तत्रभवती समाश्वासयतीति विश्वसितुं । ३ को वा तस्या आश्वासः यदि शिरोपचारमपि प्रति द्वेष्टि ।

विदूषकः—ईरिसिं तत्तहोदिं पच्चक्खं पेक्खन्तो सहिअण्णो एव्व ताए सोअणिज्जो ।

रामः—समसुखदुःखो हि सखीजनः ।

पट्टः—इत्थं खलु तस्याः सख्यः शोचन्ति । यथा ।

अंगेषु प्रतिबिम्बितस्तव शशी सत्यामसौ लक्ष्यते
ज्योत्स्नेव तव वक्त्रकुड्मलकुलच्छायाभिराक्रोडिता ।
निश्वासैस्तव वर्जिता सुरभयो श्वासलिका वायवः
कष्टं भो कथमित्थमङ्गमयतीमाश्वासयामो वयम् ॥ ३८ ॥

विदूषकः—कहं अवत्थन्तरं आरूढा तत्तहोदीए विरहावत्था ।

पट्ट.—( रामं प्रति ) ।

अनालं खलु विप्रलम्भविरहावस्थोचितास्ता कथाः
कल्याणाभिनिवेशिना कृतमिदं कार्यं कृशाङ्ग्याः शृणु ।
सवृत्तौ कठिनेतरौ स्तनतटौ कात्यायशिष्टं वपुः
मध्यं क्वापि गतं प्रकोष्ठवलयं केयूरतामागतम् ॥ ३९ ॥

विदूषकः—कहं दुस्सहं से उत्तं ।

रामः—अन्यपदेश्या खलु दशामारोपिता सीता विरहिजनोत्पातधूमकेतुना मकरकेतुना ।

पट्टः—तत्र वृत्तो मामुपसृत्य निर्गच्छत्या प्रियसख्या विनीतया महामुनीत । सरसहरिचन्दनक्षोदलिखितसंदेशवचनं केतकिकुसुमगर्भपत्रं दंतपत्रलीलापदेशेन मया समानीतं ( इति कर्णादाकृष्योपनयति ) ।

रामः—( सोत्सुक्यमादाय वाचयति ) ।

दंसणमेत्तकुरिओ सल्लावेहिं सवा अ पल्लविओ ।
पस्स सुरेण कुसुमिओ अपि णाम फलेज्जइ कुसुमसरो ॥४०॥

---

१ ईदृशीं तत्रभवतीं प्रत्यक्षं पश्यन् सखीजन एव तया शोचनीयः । २ कथं मवस्थान्तरमारूढा तत्रभवत्या विरहावस्था । ३ कथं दुःसहं अस्या वृत्तं ।

पुनः पुनर्वाचयति ( सोत्कंठमाकाशे लक्ष्यं बद्ध्वा ) प्रिये जनकपुत्रि

अलमलं परितापपरिश्रमै-
स्तननिपीड्य मनः सुमनस्समम् ।
स हि फलेदचिरात्कुसुमायुधो
यदि भवेत् सफलं मम जीवितम् ॥ ४१ ॥

विदूषकः—किं[1] अवरं एत्थ विलंबिअदि अवलंबिदं खु वअस्सेण तत्त-होदिं समस्सासेदुं । गंतव्वं ।

चंद्रः—( रामं प्रति ) ।

यद्यपि गमिष्यति भवान् भवदागमनोत्सवप्रबोधाय ।
स्पंदितुमपि न क्षमते वामाक्ष्या वाममप्यक्षि ॥ ४२ ॥

विदूषकः—एदं[2] पि उद्दीवणं तत्तहोदो गमणं तराए ।

चंद्रः—

सख्याः किं बहुना त्वमेव शरणं किं चान्यदाकर्ण्यतां
काले धीर विलंबसे किमपरां सोयं समीपस्तव ।
त्व्यायच्चंदनपंकपंकिलाविसव्यामुग्धमुक्तालता—
लीलानिर्भरविभ्रमस्तनभराभोगोपभोगोत्सवः ॥ ४३ ॥

रामः—( चंद्रं प्रति ) ननु त्वदेकशरणोऽयं जनः तत्कथय किमत्रौपयिकं ।

चंद्रः—स्वामिन्नस्यैव माधवीवनस्य दक्षिणतः पुष्पवाटिकामुत्तरेण पाश्चात्येन प्रमदवनपक्षद्वारेण प्रविश्य प्रदोषसमयेत्र तमालवीथिकया निभृतं भवद्भिश्चंद्रकांताधारागृहमासादनीयम् ।

रामः—यदाह भवान् ।

---

१ किमपरमत्र विलम्ब्यतेऽवलंबितं खलु वयस्येन तत्रभवतीं समाश्वासयितुं गम्यं । २ एतदपि उद्दीपनं तत्रभवतो गमनं त्वरायाः ।

विदूषकः—[1]जुत्तं आचक्खिदं अज्जेण दाणिं पउत्ता मज्झण्हसंझा अदिक्कमदि भोअणवेला ता जाव गच्छेम्मो ।

रामः—यद्भवते रोचते ।

चंद्रः—यदाह भवान् ।

( सर्वे उत्तिष्ठंति )

चंद्रः—( निर्वर्ण्य ) अहो निर्जीडिमतया जर्जरितजगज्जाड्यो जरठातपस्तपनः । अथ हि ।

क्षपितजलदावलेपे नभःस्थले घर्मदीधितौ तपति ।
घर्मजलमेव केवलमवशिष्टं निर्जले जगति ॥ ४४ ॥

रामः—

द्विरेफमिथुनं द्रुतं कमलिनीदलानामधः
स्थितं भजति पंकजं रविकरैरसंतापितम् ।
तमालतरुपादमूलमधिशेरते बर्हिणः
पिपासुरुपसेवते मृगगणोपि धारागृहम् ॥ ४५ ॥

( निष्क्रांताः सर्वे )

इति श्रीमद्गोविंदस्वामिनः सूनुना हस्तिमल्लेन विरचिते
मैथिलीकल्याण नाम्नि नाटके तृतीयोऽङ्कः ॥ ३ ॥

---

[1]. युक्तमाख्यातमार्येणेदानीं पुनः प्रवृत्ता मध्याह्नसंध्यातिक्रामति भोजनवेला तस्माद्यावद्गच्छामः ।

## चतुर्थोऽङ्कः ॥ ४ ॥

( ततः प्रविशति चेटी )

**चेटी**–( *निर्वर्ण्य* ) अह्लो इमस्स सुहसेविदामंदवाअत्यसीअलपदोसाणिलकअपरिरंभस्स पुणरुत्तविसट्टंतपुप्फाउहसंरंमस्स पदोसारंभस्स । दाणिं खु साअंतणधूमिज्जंतकालाअरुधूवकसणा कसणकज्जलाधिवासिदे विअ कव्वुरे अंबरे उदअराअकह्मायक्खोदसम्माणिदा पडिवालेदि रोहिणीपदिं तिमिरच्छडच्छणीलकोसेअओगुंठिएण णातिपरिफुडलक्खिज्जंततारागणमोत्तहारा पुव्वदिसा । ( *विलोक्य* ) एसो अ दाणिं उदिओ णिरंतरुप्फुल्लरत्तकं-

---

१. अहो अमुष्य सुखसेविता मंदवाता शीतलप्रदोषानिलकृतपरिरंभस्य पुनरुक्तविकसत्पुष्पायुधसंरंभस्य प्रदोषारंभस्येदानीं खलु सायंतनधूमायमानकालागुरुधूपकृष्ण कृष्णकज्जलाधिवासिते इव कर्बुरेम्बरे उदयरागकाश्मीरक्षोदसंमानिता प्रतिपालयति रोहिणीपतिं तिमिरच्छटाच्छनीलकौशेयावगुंठितेन नातिपरिस्फुटलक्ष्यतारागणमुक्ताहारा पूर्वदिक्। २. एष चेदानीमुदितो निरंतरोत्फुल्लरक्तकंकेलिकुसुमस्तवकविभ्रमो विरहिजनधैर्यनिःशीलनिर्मोटनखंडाशनिसन्निभः विघटितमिथुनमानप्रह्वजनितरोपरंजितवदनमिव मन्मथस्य समीकृत इवाधिकवाससौगंधिकमालाकंभज्ज्योत्स्नामधुरपानशौंडानां चकोरमिथुनानां प्रतिष्ठितनिमग्नमुखकांतिलब्धशोभातिशय इव मणिदर्पणरीत्या अमृतमथनरभसामंगोत्थित इव मंदरगिरिशिखरस्थितसीकरविष्णुचूडामणिकिरणवासनाद्विगुणशोणिमेव शेषफणिफणामंडलं । स्तनांशुकापवारित एकस्तनायाः इतर इव कुंकुमपंकपंकिलो स्तनः ज्योत्स्नावध्वः जलनिधितरंगविक्षिप्त इव प्रवालप्रभापाटलितः शंखः दिनकरविरहपरितापितायाः स्तनागरागारुणित इव शिशिरोपचारकमलिनीपत्रं गगनलक्ष्म्याः हरिचंदनतिलकमिव निषधगिरिगजवरस्य क्रीडाकंदुक इव निशीथिनीकन्यकाया अनंगविजयडिंडिमपुष्करप्रवृत्तवर्तुलः पद्मनाभनाभिसरः प्ररूढमिव हेमपुष्करं कामुकजनमनोरथपरिवर्तनैकस्यांगभूतः मकरध्वजविजयरथागमूतः सिंधूरित इव ऐरावणकुंभः लावण्यरसविधानरत्नकुंभो अंभोजिनीशत्रुः । अद्य हि कमलोदरगृहाभ्यंतरनिर्गता मुद्रितकलहंसनूपुररवा विष्कांतसारसरसना सीता प्रतिनवसमागमरसरसिका अभिसारयति तत्कालसमुद्गतं कुमुदाकरं लक्ष्मी ।

केलिकुसुमथनअविब्भमो विरहिजणधीरसेलणिम्मोडणसंढासणिसण्णिहो । विहडअमिहुणमाणगहजणिदरोसरंजिअवअणं विअ मम्महस्स सज्जीकओ- विअ अधिवाससोगंधिअमालवंचो ज्योण्हा महुरसपाणसुंडाणं चओरमिहु- णाणं पहिट्ठिअणिअमुहकंतिलद्धसोहाविसओ विअ मणिदप्पणो राईए गमअमहणरमसभंगुट्ठिओ विअ मंदरगिरिसिहरट्ठिओसीअरोविण्हुचूडा- मणिकिरणवासणाद्दिउणसोणिमं विअ सेसफणिफणामंडलं थणंसुओवारिअक- प्पणाए इदरो विअ कुंकुमपंकपंकिलोथणो जोहणावहुए जलणिहितरंगवि- क्खित्तो विअ पवालपहापाडलिओ संतवो विणमरविरहपरिदाविदाए थणं- विअ सिसिरोवआरकमलिणिपत्तो गअणलच्छीए हरिचंदणातिलअं विअ णिसहगिरिगअवरस्स । किल्लाकंडुओ विअ णिसिहिकण्णअए अणंगायजअ- हिंदिमपोक्खरपवट्टवट्टुलो पडुमणाहणाहिसर परूढं विअ हेमपोक्खरं कामुअ- जणमणोरहपरिवड्ढणेक्करहंगभूदो मआरद्धअविजहरहंगभूदो सिंधूरिओ विअ एरावणकुंभो । लावण्णरसणिहाणरअणकुंभो अंमोइणीसत्तू । अज्ज हिं कमलोअरथरब्भंतरणिग्गया मुद्दिअकलहंसणेडर रवा विसंतसारसरसणा रसीआ पहिणवसमा अमरसरसिआआभिसारेइ तक्कालसमुच्छसंतं कुमुदाअरं लच्छि ( विचिंत्य ) ऐअं च सव्वं मे उपआरअं सिसिरोअवआरकिरि- आए । जाव सज्जीकअसिसिरोवआरं सज्जिअं चंदअंतदारघरअं णिवेदेमि भट्टदारिआए कहिं खु दाणि सा वट्टइ ।

( ततः प्रविशत्यपरा चेटी )

चेटी—आणत्तम्हि भट्टिदारिआए सीदाए जह हंजे सुउमारिए वलवई खु मे दाणिं सीसवेअणा को कालो अ चंडअंतदारादरअं सज्जीकाउं

१ एतच्च सर्वं मे उपकारकं शिशिरोपचारक्रियायाः यावत्सज्जीकृतशिशिरोपचारं सज्जितं चंद्रकांतदारागृहं निवेदयामि भट्टारिकायाः । कस्मिन् खल्विदानीं सा वर्तते ।
२ आज्ञप्तास्मि भर्तृदारिकया सीतया यथा सुकुमारिके बलवती खलु मे इदानीं शिरोवेदना कः कालश्च चंद्रकांता धारागृहं सज्जीकर्तुं गतायाः प्रियसख्याः कौमु- दिकायाः । तस्मात्त्वया शीघ्रं ज्ञात्वागंतव्यमिति यावत्तस्मिन् गच्छामि ।

गआए पिअसहिए कोमुदीआए। तां तुए सिग्घं आणिअ आअंतव्वंति जाव तहिं गच्छेमि। ( परिक्रामति )

**प्रथमा**—( विलोक्य ) का उण एसा इदो अभिवट्टइ ( निरूप्य ) कहं पिअसहि सुहुमारिआ।

**द्वितीया**—( दृष्ट्वा ) कहं पिअसहि कोमुदीआ।

**प्रथमा**—सहि कुदो आअच्छसि।

**द्वितीया**—हला कोमुदीए अहं खु इदो आअच्छंतीए तुमं चिराअसित्ति दाणिं दु भट्टदारिआए अग्गदो णिउत्ता। किं तुए सज्जीकअं तं धाराघरअं।

**प्रथमा**—ओम।

**द्वितीया**—हला चिट्ठदु एअं को णु एसो भट्टिदारिआए संदाओ जो सिसिरोवआरेहिंपि पच्चहं वड्ढेदि।

**प्रथमा**—रहस्से खु दाव अप्पावि संकिदव्वो।

**द्वितीया**—एव्वं एदं तहवि रहस्सेति भणंति। अइमेत्तं मं उक्कसिदासि।

**प्रथमा**—कहं वा पिअसहिए रहस्सं रक्खेमि सुणाहि दाव।

**द्वितीया**—अवहिदह्मि।

---

१ का पुनरेषा इतो अभिवर्तते। २ कथं प्रियसखी सुकुमारिका। ३ कथं प्रियसखी कौमुदीका। ४ सखि कुत आगच्छसि। ५ सखि कौमुदिके अहं खलु इत आगच्छंत्यास्त्वं चिरायसीतीदानीं तु भर्तृदारिकया अग्रतो नियुक्ता। किं त्वया सज्जीकृतं तद्धारागृहं। ६ ओम् ( स्वीकारे )। ७ सखि तिष्ठत्वेतत् नु एषो भर्तृदारिकायाः संतापो यः शिशिरोपचारैरपि प्रत्यहं। ८ खलु तावदात्मापि शंकितव्यः। ९ एत[illegible] रहस्यमिति अतिमात्रं मामुत्सुकयसि। १० कथं वा [illegible]
११ अवहितास्मि।

प्रथमा–हंजे एवं खु अहं तुमं विअ पुणो णिव्वंधिअ पुच्छअंति पिअसहीए भणिदम्हि कलावईए जह सहि कोमुदीए पुव्वं खु वसंतदोलारोहणदिणे कामदेवघरब्भंतरे दिट्ठो भट्टिदारिआए भट्टा रामो पुणो अ माहविवणे अप्पम्हि उक्कंठंतो दिट्ठो सो एव्व दाणि भट्टिदारिआए संदावहेउत्ति ।

द्वितीया–हंला जुज्जइ ।

प्रथमा–हंला किं दाणि अम्हे भट्टिदारिआपासं गच्छेमो आदु चंदअंतधाराघरं एव्व पडिवालेमो ।

द्वितीया–एव्वं खु अहं पिअसहिए भणिदम्हि विणीदाए जह सहि सुउमारिए बहुजणपलावं ण सहइ सीसवेअणाहिरिअदो भट्टिदारिआ ता सहिअणंपि सव्वं पमअवणदुवारे एव्व णिसिहेहित्ति ।

प्रथमा–तेणं हि तुमं तं णिओअं अणुचिट्ठ, अहं पि सज्जीकअं धारापरअं भट्टिदारिआए णिवेदेमि ।

द्वितीया–सहि तह ।

( निष्क्रान्ते )

---

१. सखि एवं खलु अहं त्वामिव पुनर्निबध्य पृच्छन्ति प्रियसख्या भणितास्मि कलावत्या यथा सखि कौमुदिके पूर्वं खलु वसंतदोलारोहणदिने कामदेवगृहाभ्यंतरे दृष्टो भर्तृदारिकाया भर्ता रामः । पुनश्च माधवीवने आत्मानि उत्कंठमानो दृष्टः स एवेदानीं भर्तृदारिकासंतापहेतुरिति । २ सखि युज्यते । ३ सखि किमिदानीमावां भर्तृदारिकापार्श्वं गच्छाव अथवा चन्द्रकान्तधारागृहे प्रतिपालयाव । ४ एवं खल्वहं प्रियसख्या भणितास्मि विनीतया यथा सखि सुकुमारिके बहुजनप्रलापं न सहते शीर्षवेदनातिरिक्ता भर्तृदारिका तस्मात्सखिजनमपि सर्वं प्रमदवनद्वारे निषेधयेति । ५ तेन हि त्वं तं नियोगमनुतिष्ठ अहमपि सज्जीकृत्य धारागृहं भर्तृदारिकाया निवेदयामि । ६ सखि तथा ।

